**विदूषकः** । तथास्थित एव । भो महाराअ । ण मे हत्थो पसरदि । वाआमेत्तकेण जआवीअसि । जअदु जअदु भवं ।

३ **राजा** । विलोक्य सस्मितम् । कुतोऽयं गात्रोपघातः ।

**विदूषकः** । कुदो किल सअं जेव अच्छी आउलीकरिअ अस्सु-कारणं पुच्छसि ।

६ **राजा** । वयस्य न खल्ववगच्छामि । भिन्नार्थमभिधीयताम् ।

**विदूषकः** । जं वेदसो खुज्जस्स लीलं विडम्बेदि तं किं अत्तणो पहावेण अध णदीवेअस्स ।

९ **राजा** । नदीवेगस्तत्र कारणम् ।

**विदूषकः** । ममावि भवं ।

**राजा** । कथमिव ।

१२ **विदूषकः** । सरोषमिव । भोः । तए णाम राअकज्जाणि उज्झिअ तादिसे अ कीलापासादे वणअरेक्कविक्तिणा होदव्वं । जं सच्चं पच्चहं सापदाणुगमणेहिं संघोहिदसन्धिबन्धणाणं अङ्गाणं अणी-

---

२·१-२ भो महाराज । न मे हस्तः प्रसरति । वाङ्मात्रकेण जाप्यसे । जयतु जयतु भवान् ।

२·४-५ कुतः किल स्वयमेवाक्षिणी आकुलीकृत्याश्रुकारणं पृच्छसि ।

२·७-८ यद्वेतसः कुब्जस्य लीलां विडम्बयति तत्किमात्मनः प्रभावेण अथ नदीवेगस्य ।

२·१० ममापि भवान् ।

२·१२-१६ भोः । त्वया नाम राजकार्याण्युज्झित्य तादृशांश्च क्रीडाप्रासादा-न्वनचरैकवृत्तिना भवितव्यम् । यत्सत्यं प्रत्यहं श्वापदानुगमनैः संक्षोभितसन्धिबन्धनानामङ्गानामनीशोऽस्मि संवृत्तः । .... ।

१५ सोम्हि संवुत्तो । सप्रणयम् । ता पसीद । एक्काहंपि दाव विस्स-
मीअदु ।
राजा । आत्मगतम् । अयमेवमाह । ममापि काश्यपसुतामनुस्मृत्य
१८ मृगयाविक्लवं चेतः । कुतः—

न नमयितुमधिज्यमुत्सहिष्ये
धनुरिदमाहितसायकं मृगेषु ।
सहवसतिमुपेत्य यैः प्रियायाः
कृत इव लोचनकान्तिसंविभागः ॥ ३ ॥

विदूषकः । राज्ञो मुखमवलोक्य । अत्तभवं हिअएण किंपि मन्ते-
दि । अरण्णे मए रुदितं ।
३ राजा । सस्मितमिव । किमन्यत् । अनतिक्रमणीयं सुहृद्वाक्य-
मिति स्थितोऽस्मि ।
विदूषकः । चिरं जीअ । गन्तुमिच्छति ।
६ राजा । तिष्ठ । सावशेषं मे वचः ।
विदूषकः । आणवेदु भवं ।
राजा । विश्रान्तेन भवता ममान्यस्मिन्ननायासे कर्मणि सहा-
९ येन भवितव्यम् ।
विदूषकः । किं मोदअखज्जिआए ।
राजा । यत्र वक्ष्यामि ।

---

तत्प्रसीद । एकाहमपि तावद्विश्रम्यताम् ।

३.१-२ अत्र भवान् हृदयेन किमपि मन्त्रयते । अरण्ये मया रुदितम् ।

३.५ चिरं जीव । ३.७ आज्ञापयतु भवान् ।

३.१० किं मोदकखादिकायाम् ।

१२ **विदूषकः ।** गहीदो खणो ।

**राजा ।** कः कोऽत्र भोः ।

प्रविश्य । **दौवारिकः ।** आणवेदु भट्टा ।

१५ **राजा ।** रैवतक । सेनापतिस्तावदाहूयताम् ।

**रैवतकः ।** जं भट्टा आणवेदि । इति निष्क्रान्तः ।

ततः प्रविशति सेनापतिर्दौवारिकश्च ।

१८ **सेनापतिः ।** राजानं विलोक्य । दृष्टदोषापि मृगया स्वामिनि केवलं गुणायैव संवृत्ता । तथा हि देवः –

अनवरतधनुर्ज्यास्फालनक्रूरपूर्वं
रविकिरणसहिष्णु स्वेदलेशैरभिन्नम् ।
अपचितमपि गात्रं व्यायतत्वादलक्ष्यं
गिरिचर इव नागः प्राणसारं बिभर्ति ।। ४ ।।

**दौवारिकः ।** अज्ज । एसोक्खु अण्णावअणुक्कण्ठो इदो दिण्णदिट्ठिज्जेव्व चिट्ठदि भट्टा । ता उपसप्पदु अज्जो ।

३ **सेनापतिः ।** उपसृत्य सप्रणामम् । जयतु जयतु स्वामी । स्वामिन् । गृहीतं प्रचारसूचितश्वापदमरण्यम् । किमन्यदवस्थीयते ।

**राजा ।** भद्र सेनापते । मन्दोत्साहः कृतोऽस्मि मृगयापवादिना

६ माधव्येन ।

---

३·१२ गृहीतः क्षणः । ३·१४ आज्ञापयतु भर्ता ।

३·१६ यद्भर्ता आज्ञापयति ।

४·१-२ आर्य । एष खलु आज्ञावचनोत्कण्ठ इतो दत्तदृष्टिरेव तिष्ठति भर्ता । तदुपसर्पत्वार्यः ।

**सेनापतिः ।** जनान्तिकम् । माधव्य । स्थिरप्रतिबन्धो भव । अहमपि तावत्स्वामिनश्चित्तमनुवर्तिष्ये । प्रकाशम् । देव । प्रल-
२ पत्येष वैधेयः । ननु प्रभुरेव निदर्शनम् ।

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्या हि व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥ ५ ॥

**विदूषकः ।** कृतकरोषम् । अत्तभवं दाव पकिदिमापण्णो । तुवं उण अडईदो अडइं आहिण्ड जाव सीमासिआलो विअ जिण्ण-
३ रिक्खस्स मुहे पडिस्ससि ।

**राजा ।** भद्र सेनापते । आश्रमसंनिकर्षे वर्तामहे । अतस्ते वचो नाभिनन्दामि । अद्य तावत्—

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विश्रब्धं क्रियतां वराहततिभिर्मुस्ताक्षतिः पल्वले
विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥ ६ ॥

**सेनापतिः ।** यथा प्रभविष्णवे रोचते ।

**राजा ।** तेन हि निवर्त्यन्तां वनग्राहिणः । यथा सैनिकास्तपो-
३ वनं दूरात्परिहरन्ति तथा निषेद्धव्याः । पश्य ।

---

५.१-३ अत्र भवांस्तावत्प्रकृतिमापन्नः । त्वं पुनरटवीतोऽटवीमाहिण्ड यावत्सीमाश्रृगाल इव जीर्णर्क्षस्य मुखे पतिष्यसि ।

शमप्रधानेषु तपोधनेषु
गूढं हि दाहात्मकमस्ति तेजः।
स्पर्शानुकूला इव सूर्यकान्ता-
स्तदन्यतेजोभिभवाद्वमन्ति ॥ ७ ॥

**विदूषकः।** भो उच्छाहइत्तअ। सीग्घं इदो णिग्गम।

**सेनापतिः।** यथाज्ञापयति स्वामी। निष्क्रान्तः।

३ **राजा।** परिजनमवलोक्य। मृगयावेशमपनयन्तु भवन्तः। रैवतक। त्वमपि स्वं नियोगमशून्यं कुरु।

**रैवतकः।** जं देवो आणवेदि। निष्क्रान्तः।

६ **विदूषकः।** सहासम्। किदो भवदा णिद्धूमको दंसपडीआरो। ता संपदं एदस्सिं णिव्वासपादवच्छाआपरिवुदे विदाणअसणाहे आसणे जहासुहं उवविसदु भवं जाव अहंपि सुहासणत्थो ९ होम्मि।

उभावुपविष्टौ।

**राजा।** सखे माधव्य। अनवाप्तचक्षुःफलोऽसि येन त्वया १२ दर्शनीयं न दृष्टम्।

**विदूषकः।** णं भवं अग्गदो मे चिट्ठदि।

**राजा।** सर्वः कान्तमात्मानं पश्यति। किं तु तामेवाहमाश्रम- १५ ललामभूतां शकुन्तलामाश्रित्य ब्रवीमि।

---

७·१ भो उत्साहयितृक। शीघ्रमितो निर्गच्छ।
७·५ यद्देव आज्ञापयति।
७·६-९ कृतो भवता निर्धूमको दंशप्रतीकारः। तत्साम्प्रतमेतस्मिन्निवासपादपच्छायापरिवृते वितानकसनाथे आसने यथासुखमुपविशतु भवान्यावदहमपि सुखासनस्थो भवामि।
७·१२ ननु भवानग्रतो मे तिष्ठति।

१५ **विदूषकः** । अपवार्य । भोदु । ण से अवसरं वड्ढाइस्सं । प्रकाशम् । जदा दाव सा तावसकण्णका अप्पत्थणीआ किं तए दिट्ठाए ।

**राजा** । मूर्ख । परिहार्येऽपि वस्तुनि दुःषन्तस्य मनः प्रवर्तते ।

१८ **विदूषकः** । ता कथं एदं ।

**राजा** ।

ललिताप्सरोभवं किल मुनेरपत्यं तदुज्झिताधिगतम् ।
अर्कस्योपरि शिथिलं च्युतमिव नवमालिकाकुसुमम् ॥ ८ ॥

**विदूषकः** । विहस्य । भोः । जधा कस्सावि पिण्डखज्जूरेहिं उव्वेजिदस्स तिन्तिडिआए अहिलासो भोदि तधा इत्थिआ-
२ रअणपरिभोइणो भवदो इअं पत्थणा ।

**राजा** । न तावदेनां पश्यसि येन त्वमेवंवादी ।

**विदूषकः** । तं खु रमणीअं णाम जं भवदोवि विम्हअं उप्पादेदि ।

६ **राजा** । वयस्य । किं बहुना ।

चित्रे निवेश्य परिकल्पितसत्त्वयोगा
रूपोच्चयेन महता विधिना कृता नु ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ ९ ॥

---

७·१५-१६ भवतु । नास्यावसरं वर्धापयिष्ये ।...। यदा तावत्सा तापसकन्यका अप्रार्थनीया किं तया दृष्टया ।

७·१८ तत्कथमेतत् ।

८·१-३ भोः । यथा कस्यापि पिण्डखर्जूरैरुद्वेजितस्य तिन्तिडिक्यामभिलाषो भवति तथा स्त्रीरत्नपरिभोगिनो भवत इयं प्रार्थना ।

८·५ तत्खलु रमणीयं नाम यद्भवतोऽपि विस्मयमुत्पादयति ।

**विदूषकः।** सव्वधा पच्चादेसो दाणीं रूववदीणं।

**राजा।** इदं च मे मनसि वर्तते।

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधु नवमनास्वादितरसम्।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः॥ १०॥

**विदूषकः।** तेण हि लहु लहु गच्छदु भवं। मा कस्स वि इङ्गुदीतेलचिक्कणसीसस्स आरण्णकस्स हत्थे पडिस्सदि।

३ **राजा।** परवती तत्रभवती। न च संनिहितगुरुजना।

**विदूषकः।** अध भवन्तमन्तरेण कीदिसो उण से दिट्ठिराओ।

**राजा।** वयस्य। स्वभावादप्रगल्भस्तपस्विकन्यकाजनः। तथापि

अभिमुखे मयि संहृतमीक्षितं
हसितमन्यनिमित्तकथोदयम्।
विनयवारितवृत्तिरतस्तया
न विवृतो मदनो न च संवृतः॥ ११॥

**विदूषकः।** विहस्य। किं णु क्खु सा भवदो दिट्ठमेत्तस्स जेव्व अङ्कमारोहदु।

---

९.१ सर्वथा प्रत्यादेश इदानीं रूपवतीनाम्।

१०.१-२ तेन हि लघु लघु गच्छतु भवान्। मा कस्यापि इङ्गुदीतैलचिक्कण-शीर्षस्यारण्यकस्य हस्ते पतिष्यति।

१०.४ अथ भवन्तमन्तरेण कीदृशः पुनस्तस्या दृष्टिरागः।

११.१-२ किं नु खलु सा भवतो दृष्टमात्रस्यैवाङ्कमारोहतु।

३ राजा । सखीभ्यां मिथःप्रस्थाने तत्रभवत्या भूयिष्ठमाविष्कृतो भावः । तथा हि–

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥ १२ ॥

विदूषकः । भो गहीदपाथेओ होहि । किदं तए अणुरूवं तपोवणं ति तक्केमि ।

३ राजा । सखे चिन्तय तावत्केनापदेशेन पुनराश्रमपदं गच्छामः ।

विदूषकः । एसो चिन्तेमि । मा क्खु से अलिअपरिदेविदेहिं समाधिं भञ्जिहि । चिन्तयित्वा । भोः । को अण्णो उपाओ । णं

६ भवं राजा ।

राजा । ततः किम् ।

विदूषकः । णीवारछब्भागं दाव तावसा उवहरन्तु त्ति ।

९ राजा । अन्यं भागमेते रक्षिणे निर्वहन्ति यो रत्नराशीनपि विहायाभिनन्द्यते । पश्य –

यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तत्फलम् ।
तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः ॥ १३ ॥

नेपथ्ये । हन्त । सिद्धार्थौ स्वः ।

---

१२·१-२ भो गृहीतपाथेयो भव । कृतं त्वयानुरूपं तपोवनमिति तर्कयामि ।

१२·४-६ एष चिन्तयामि । मा खलु तेऽलीकपरिदेवितैः समाधिं भाङ्क्षीः । |...| भोः । कोऽन्य उपायः । ननु भवान्राजा ।

१२·८ नीवारषड्भागं तावत्तापसा उपहरन्त्विति ।

**राजा।** कर्णं दत्त्वा। अये। धीरप्रशान्तस्वरैस्तपस्विभिर्भवि-
३ तव्यम्।

प्रविश्य। **दौवारिकः।** जयतु जयतु भट्टा। एदे दुए इसिकुमारआ पडिहारभूमिं उवट्ठिदा।

६ **राजा।** अविलम्बितं प्रवेशय।

**दौवारिकः।** अअं पवेसेमि। निष्क्रान्तः।

ततः प्रविशतस्तापसौ दौवारिकश्च।

९ **दौवारिकः।** इदो इदो भवन्ता।

**एकः।** राजानं दृष्ट्वा। अहो दीप्तिमतोऽपि विश्वसनीयतास्य वपुषः। अथ वोपपन्नमेतदृषिकल्पे राजनि। तथा हि—

> अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये
> रक्षायोगादयमपि तपः प्रत्यहं संचिनोति।
> अस्यापि द्यां स्पृशति वशिनश्चारणद्वंद्वगीतः
> पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः॥ १४॥

**द्वितीयः।** गौतम। अयं स बलभित्सखो दुःषन्तः।

**प्रथमः।** अथ किम्।

३ **द्वितीयः।** तेन हि—

> नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्री-
> मेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति।
> आशंसन्ते सुरसमितयः सक्तवैरा हि दैत्यै-
> रस्याधिज्ये वपुषि विजयं पौरुहूते च वज्रे॥ १५॥

---

१३·४-५ जयतु जयतु भर्ता। एतौ द्वौ ऋषिकुमारकौ प्रतिहारभूमि-मुपस्थितौ।

१३·७ अयं प्रवेशयामि। १३·९ इत इतो भवन्तौ।

**उभौ ।** उपसृत्य । **स्वस्ति भवते ।** फलान्युपनयतः ।

**राजा ।** सादरमुत्थाय । **अभिवादये भवन्तौ ।** सप्रणामं गृहीत्वा ।

३ आसन उपविश्य । **आगमप्रयोजनं ज्ञातुमिच्छामि ।**

**ऋषी ।** **विदितो भवानाश्रमवासिनामिहस्थः । तेन भवन्तमभ्यर्थयन्ते ।**

६ **राजा ।** **किमाज्ञापयन्ति ।**

**उभौ ।** **तत्रभवतः काश्यपमुनेरसांनिध्याद्रक्षांसि नरतपोविघ्नमुत्पादयिष्यन्ति । तत्कतिपयरात्रं सारथिद्वितीयेन भवता**

९ **सनाथीक्रियतामाश्रम इति ।**

**राजा ।** **अनुगृहीतोऽस्मि ।**

**विदूषकः ।** अपवार्य । **अयं दाणिं दे अणुऊलो गलहत्थो ।**

१२ **राजा ।** **रैवतक ।** **मद्वचनादुच्यतां सारथिः सबाणकार्मुकं रथमुपनयेति ।**

**दौवारिकः ।** **जं भट्टा आणवेदि ।** निष्क्रान्तः ।

१५ **ऋषी ।** सहर्षम् ।

**अनुकारिणि पूर्वेषां युक्तरूपमिदं त्वयि ।**
**आपन्नाभयसत्त्वेषु दीक्षिताः खलु पौरवाः ॥ १६ ॥**

**राजा ।** **गच्छतां भवन्तौ । अहमप्यनुपदमागत एव ।**

**ऋषी ।** **विजयस्व ।** निष्क्रान्तौ ।

३ **राजा ।** **माधव्य । अप्यास्ति शकुन्तलादर्शनकौतुकम् ।**

---

१५.११ अयमिदानीं तेऽनुकूलो गलहस्तः ।

१५.१४ यद्भर्ताज्ञापयति ।

**विदूषकः।** पढमं सपरिवाहमासि। सभयम्। रक्खसवुत्तन्तेण उण संपदं विंदूवि णावसेसिदो।

६ **राजा।** मा भैषीः। ननु मत्समीपे भविष्यसि।

**विदूषकः।** एसो चक्करक्खी भूदोम्हि।

प्रविश्य। **दौवारिकः।** सज्जो रधो भट्टिणो विजअपत्थाणं

९ उदिक्खदि। एसो उण णअरादो देवीणं सआसादो करभओ आअदो।

**राजा।** सादरम्। किमज्जूभिः प्रेषितः।

१२ **दौवारिकः।** अध इं।

**राजा।** प्रवेश्यताम्।

**दौवारिकः।** जं भट्टा आणवेदि। निष्क्रान्तः।

१५ ततः प्रविशति दौवारिकेण सह करभकः।

**करभकः।** उपसृत्य। जअदु जअदु भट्टा। देवीओ आणवेन्ति जधा आगामिणि चउत्थे दिअसे पुत्तपिण्डाराहणो णाम

१८ उववासो भविस्सदि। तत्थ दीहाउणा अवस्सं संणिहिदेण होदव्वं।

---

१६.४ प्रथमं सपरिवाहमासीत्।....। राक्षसवृत्तान्तेन पुनः सांप्रतं बिन्दुरपि नावशेषितः।

१६.७ एष चक्ररक्षी भूतोऽस्मि।

१६.८-१० सज्जो रथो भर्तुर्विजयप्रस्थानमुदीक्षते। एष पुनर्नगराद्देवीनां सकाशात्करभक आगतः।

१६.१२ अथ किम्। १६.१४ यद्भर्ताज्ञापयति।

१६.१६-१९ जयतु जयतु भर्ता। देव्य आज्ञापयन्ति यथा आगामिनि चतुर्थे दिवसे पुत्रपिण्डाराधनो नाम उपवासो भविष्यति। तत्र दीर्घायुषावश्यं संनिहितेन भवितव्यम्।

राजा । माधव्य । इतस्तपस्विकार्यम् इतो गुरुजनाज्ञा । उभय-
२१ मप्यनुल्लङ्घनीयम् । कथमत्र प्रतिविधेयम् ।

विदूषकः । तिसङ्कू विअ अन्तरा चिट्ठ ।

राजा । सत्यमाकुलीभूतोऽस्मि ।

कृत्ययोर्भिन्नदेशत्वाद्द्वैधीभवति मे मनः ।
पुरः प्रतिहतं शैले स्रोतः स्रोतोवहो यथा ॥ १७ ॥

विचिन्त्य । सखे माधव्य । त्वमज्जूभिः पुत्र इति प्रतिगृहीतः ।
तद्भवानितः प्रतिनिवृत्य तपस्विकार्यव्यग्रतामस्माकमावेद्य तत्र-
३ भवतीनां पुत्रकार्यमनुष्ठातुमर्हति ।

विदूषकः । ण क्खु मं रक्खसभीरुअं गणेसि ।

राजा । सस्मितम् । महाब्राह्मण । कथमेतद्भवति संभाव्यते ।

६ विदूषकः । तेण हि जहा राआणुजेण गन्तव्वं तथा गमिस्सं ।

राजा । ननु तपोवनोपरोधः परिहरणीय इति सर्वमनुयात्रिक-
जनं त्वया सह प्रस्थापयामि ।

९ विदूषकः । सगर्वम् । तेण हि जुअराओम्हि संवुत्तो ।

राजा । आत्मगतम् । चपलोऽयं बटुः । कदाचिदस्मत्प्रार्थना-
मन्तःपुरेभ्यः कथयेत् । भवतु । एवं तावद्वक्ष्यामि । विदूषकं हस्ते
१२ गृहीत्वा । प्रकाशम् । वयस्य । ऋषिगौरवादाश्रमं गच्छामि । न
खलु सत्यमेव तापसकन्यकायां ममाभिलाषः । पश्य—

---

१६.२२ त्रिशङ्कुरिवान्तरा तिष्ठ ।
१७.४ न खलु मां राक्षसभीरुकं गणयसि ।
१७.६ तेन हि यथा राजानुजेन गन्तव्यं तथा गमिष्यामि ।
१७.९ तेन हि युवराजोऽस्मि संवृत्तः ।

क्व वयं क्व परोक्षमन्मथो
मृगशावैः सममेधितो जनः ।
परिहासविजल्पितं सखे
परमार्थेन न गृह्यतां वचः ॥ १८ ॥

विदूषकः । एव्वं णेदं । सोत्थि भवते ।

निष्क्रान्ताः सर्वे ।

॥ इति द्वितीयोऽङ्कः ॥

---

१८·१ एवं न्विदम् । स्वस्ति भवते ।

# ॥ अथ तृतीयोऽङ्कः ॥

ततः प्रविशति यजमानशिष्यः ।

**शिष्यः ।** कुशानादाय । अहो महाप्रभावो दुःषन्तः । प्रविष्टमात्र
३ एव सारथिद्वितीये तत्रभवति निरुपप्लवानि नः कर्माणि संवृत्तानि ।

का कथा बाणसंधाने ज्याशब्देनैव दूरतः ।
हुंकारेणैव धनुषः स हि विघ्नानपोहति ॥ १ ॥

यावदिमान्वेदिसंस्तरणार्थं दर्भानृत्विग्भ्य उपहरामि । परिक्रम्यावलोक्य च । आकाशे । प्रियंवदे । कस्येदमुशीरानुलेपनं मृणाल-
३ वन्ति च नलिनीपत्राणि नीयन्ते । श्रुतिमभिनीय । किं ब्रवीषि ।
आतपलङ्घनाद्बलवदस्वस्था शकुन्तला । तस्याः शरीरनिर्वापणाय – इति । प्रियंवदे । यत्नादुपचर्यताम् । सा हि तत्रभवतः कुल-
६ पतेरुच्छ्वसितम् । अहमपि वैतानिकं शान्त्युदकमस्या आर्यागौतमीहस्ते प्रहेष्यामि । निष्क्रान्तः ।

इति विष्कम्भकः ।

९ ततः प्रविशति कामयानावस्थो राजा ।

**राजा ।** निःश्वस्य । सचिन्तम् ।

जाने तपसो वीर्यं सा बाला परवतीति मे विदितम् ।
अलमस्मि ततो हृदयं तथापि नेदं निवर्तयितुम् ॥ २ ॥

भगवन्कुसुमायुध । त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसंधीयते कामीजनसार्थः । कुतः –

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-
र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान्वज्रसारीकरोषि ॥ ३ ॥

अथ वा –

अनिशमपि मकरकेतो मनसो रुजमावहन्नभिमतो मे ।
यदि मदिरायतनयनां तामधिकृत्य प्रहरसीति ॥ ४ ॥

सखेदं परिक्रम्य । क्व नु खलु संस्थिते कर्मणि सदस्यैरनुज्ञातः श्रमक्लान्तमात्मानं विनोदयामि । निःश्वस्य । किं नु खलु ३ प्रियादर्शनादृते शरणमन्यत् । यावदेनामन्विष्यामि । सूर्यमवलोक्य । इमामुग्रातपां वेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु तत्र-भवती ससखीजना गमयति । तत्रैव तावद्गच्छामि । परिक्रम्य ६ साह्लादं वायुस्पर्शं निरूपयन् । अहो प्रवातसुभगोऽयमुद्देशः ।

शक्यमरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम् ।
अङ्गैरनङ्गतप्तैरविरलमालिङ्गितुं पवनः ॥ ५ ॥

परिक्रम्यावलोक्य च । अस्मिन्वेतसपरिक्षिप्ते लतामण्डपे शकुन्तलया भवितव्यम् । तथा हि –

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥ ६ ॥

यावद्विटपान्तरेणावलोकयामि । तथा कृत्वा सहर्षम् । अये । लब्धं नेत्रनिर्वाणम् । एषा मनोरथप्रिया मे सकुसुमास्तरणं शिला-३ पट्टमधिशयाना सखीभ्यामन्वास्यते । भवतु । लताव्यवहितः श्रोष्यामि तावदासां विश्रब्धकथितानि । तथा कुर्वन्स्थितः ।

ततः प्रविशति यथानिर्दिष्टा शकुन्तला सख्यौ च ।

६ **सख्यौ** । उपवीज्य । सस्नेहम् । **सहि सउन्दले । अपि सुहाअदि दे णलिणीपत्तवादो ।**

**शकुन्तला** । वेदनां नाटयित्वा । **किं वीजअन्ति मं सहीओ ।**

९ उभौ सविषादमन्योन्यमवलोकयतः ।

**राजा । बलवदस्वस्था खल्वत्रभवती ।** साभिलाषं निर्वर्ण्य । **तत्किमयमातपदोषः स्यादुत यथा मे मनसि वर्तते ।** विचिन्त्य ।

१२ **अथ वा कृतं संदेहेन ।**

**स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं**
**प्रियायाः साबाधं सदपि कमनीयं वपुरिदम् ।**
**समस्तापः कामं मनसिजनिदाघप्रसरयो-**
**र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥ ७ ॥**

**अनसूया । हला सउन्दले । अणब्भन्तरा अम्हे मअणगदस्स वुत्तन्तस्स । किंदु जादिसी इतिहासगदेसु मअणवुत्तन्तेसु कामअ-**
३ **माणस्स अवत्था सुणीअदि तादिसं च लक्खम्ह । ता कहेहि । किंणिमित्तं दे अअं आआसो । विकारं खु परमत्थदो अजाणिअ अणारम्भो पदीआरस्स ।**

६ **राजा । अनसूयामप्यनुगतो मदीयस्तर्कः ।**

**शकुन्तला** । आत्मगतम् । **बलवं च मे अहिणिवेसो । ण अ सक्कणोमि सहसा णिवेदिदुं ।**

---

६.६-७ सखि शकुन्तले । अपि सुखायति ते नलिनीपत्त्रवातः ।
६.८ किं वीजयन्तो मां सख्यौ ।
७.१-५ हला शकुन्तले । अनभ्यन्तरे आवां मदनगतस्य वृत्तान्तस्य । किंतु यादृशी इतिहासगतेषु मदनवृत्तान्तेषु कामयमानस्यावस्था श्रूयते तादृशीं च लक्षयामः । तत्कथय । किंनिमित्तं तेऽयमायासः । विकारं खलु परमार्थतोऽज्ञात्वानारम्भः प्रतीकारस्य ।
७.७-८ बलवांश्च मेऽभिनिवेशः । न च शक्नोमि सहसा निवेदयितुम् ।

१ प्रियंवदा। सहि। सुट्ठु एसा भणादि। किण्णेदं अत्तणो उपद्दवं णिगूहसि। अणुदिअसं च परिहीअसे अङ्गेहिं। केवलं लावण्णमयी छाया तुमं ण मुञ्चदि।

राजा। अवितथमाह प्रियंवदा। तथा ह्यस्याः—

क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं
मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा।
शोच्या च प्रियदर्शना च मदनक्लिष्टेयमालक्ष्यते
पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी॥ ८॥

शकुन्तला। कस्स वा अण्णस्स कधइस्सं। आआसइत्तिआ दाणिं वो भविस्सं।

२ उभे। अदो ज्जेव णो णिब्बन्धो। संविभत्तं खु दुक्खं सज्झवेदणं भोदि।

राजा। पृष्टा जनेन समदुःखसुखेन बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुम्।
दृष्टो विवृत्य बहुशोऽप्यनया सतृष्ण-
मत्रोत्तरश्रवणकातरतां गतोऽस्मि॥ ९॥

शकुन्तला। सलज्जम्। जदोपहुदि स तवोवणरक्खिदा राएसी मम दंसणपधं आअदो तदो आरभिअ तग्गदेण अहिलासेण
३ एदावत्थम्हि संवुत्ता।

---

७·९-११ सखि। सुष्ठ्वेषा भणति। किं न्वेतमात्मन उपद्रवं निगूहसि। अनुदिवसं च परिहीयसेऽङ्गैः। केवलं लावण्यमयी छाया त्वां न मुञ्चति।

८·१-२ कस्य वान्यस्य कथयिष्यामि। आयासयित्रिकेदानीं वां भविष्यामि।

८·३-४ अत एव नौ निर्बन्धः। संविभक्तं खलु दुःखं सह्यवेदनं भवति।

९·१-३ यतःप्रभृति स तपोवनरक्षिता राजर्षिर्मम दर्शनपथमागतस्तत आरभ्य तद्गतेनाभिलाषेणैतदवस्थास्मि संवृत्ता।

राजा । सहर्षम् । श्रुतं श्रोतव्यम् ।

स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः ।

दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य ॥ १० ॥

शकुन्तला । ता जइ वो अणुमदं तत्तधा मन्तेध जधा तस्स राएसिणो अणुअम्पणीआ होमि । अण्णधा सुमरेध मं ।

३ राजा । विमर्शच्छेदि वचनम् ।

प्रियंवदा । जनान्तिकम् । अणसूए । दूरगदमम्महा इअं अक्खमा कालहरणस्स ।

६ अनसूया । जनान्तिकम् । जधा भणासि । प्रकाशम् । सहि । दिट्ठिआ अणुरूवो दे अहिलासो । साअरं वज्जिअ कहिं वा महाणदी ओदरइ ।

९ प्रियंवदा । को दाणिं सहआरं अदिमुत्तलदाए प्रवल्लिदं णेच्छदि ।

राजा । किमत्र चित्रं यदि विशाखे शशाङ्कलेखामनुवर्तेते ।

अनसूया । को उण उवाओ भवे जेण सहिए अविलम्बिदं

१२ णिगूढं मणोरहं संपादेम्ह ।

प्रियंवदा । णिगूढं ति चिन्तणीअं भवे । सिग्घं ति ण दुक्करं ।

---

१०.१-२ तद्यदि वामनुमतं तत्तथा मन्त्रयेथां यथा तस्य राजर्षेरनुकम्पनीया भवामि । अन्यथा स्मरतं माम् ।

१०.४-५ अनसूये । दूरगतमन्मथेयमक्षमा कालहरणस्य ।

१०.६-८ यथा भणसि । .... । सखि । दिष्टया अनुरूपस्तेऽभिलाषः । सागरं वर्जयित्वा कुत्र वा महानद्यवतरति ।

१०.९ क इदानीं सहकारमतिमुक्तलतया प्रवल्लितं नेच्छति ।

१०.११-१२ कः पुनरुपायो भवेद्येन सख्या अविलम्बितं निगूढं च मनोरथं संपादयावः ।

१०.१३ निगूढमिति चिन्तनीयं भवेत् । शीघ्रमिति न दुष्करम् ।

अनसूया । कधं विअ ।

१५ प्रियंवदा । सो राएसी इमाए सिणिद्धदिट्ठिसूइदाहिलासो इमाइं दिवसाइं पआअरकिसो विअ लक्खीअदि ।

राजा । सत्यमित्थंभूतोऽस्मि । तथा हि—

इदमशिशिरैरन्तस्तापाद्विवर्णमणीकृतं
निशि निशि भुजन्यस्तापाङ्गप्रवृत्तिभिरश्रुभिः ।
अनतिलुलितज्याघाताङ्कान्मुहुर्मणिबन्धना-
त्कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्यते ॥ ११ ॥

प्रियंवदा । विचिन्त्य । अणसूए । मअणलेहो दाणिं करीअदु । तं सुमणोगोविदं कदुअ देवदासेसावदेसेण तस्स रण्णो हत्थे
५ पावइस्सं ।

अनसूया । रोअदि मे सुउमारो पओओ । किं वा सउन्दला भणादि ।

६ शकुन्तला । सलज्जम् । णिओओ वो विकप्पीअदि ।

प्रियंवदा । तेण हि उवण्णासपुव्वं अत्तणो चिन्तेहि किंपि सुललिदं पदबन्धं ।

---

१०·१४ कथमिव ।

१०·१५-१६ स राजर्षिरस्यां स्निग्धदृष्टिसूचिताभिलाष एतान् दिवसान् प्रजागरकृश इव लक्ष्यते ।

११·१-२ अनसूये । मदनलेख इदानीं क्रियताम् । तं सुमनोगोपितं कृत्वा देवताशेषापदेशेन तस्य राज्ञो हस्ते प्रापयिष्यामि ।

११·४-५ रोचते मे सुकुमारः प्रयोगः । किं वा शकुन्तला भणति ।

११·६ नियोगो वां विकल्प्यते ।

११·७-८ तेन हि उपन्यासपूर्वमात्मनश्चिन्तय किमपि सुललितं पदबन्धम् ।

१ शकुन्तला । चिन्तइस्सं । अवधीरणाभीरुअं पुणो वेवदि मे हिअअं ।

राजा । सहर्षम् ।

> अयं स ते तिष्ठति संगमोत्सुको
> विशङ्कसे भीरु यतोऽवधीरणाम् ।
> लभेत वा प्रार्थयिता न वा श्रियं
> श्रिया दुरापः कथमीप्सितो भवेत् ॥ १२ ॥

सख्यौ । अयि अत्तगुणावमाणिणि । को णाम सारदीयं जोण्हं पटन्तेण वारयिस्सदि ।

२ राजा । स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि । तथा हि ।

> उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
> कण्टकितेन प्रथयति मय्यनुरागं कपोलेन ॥ १३ ॥

शकुन्तला । हला । चिन्तिदा मए गीदिआ । असंणिहिदाणि उण लेहसाधणाणि ।

३ प्रियंवदा । इमस्सिं सुओदरसुउमारे णलिणीपत्ते पत्तच्छेदभत्तीए णहेहिं णिक्खिदवण्णं करेहि ।

शकुन्तला । तथा कृत्वा । सुणध दाव संगदत्थं ण वेति ।

---

११.९-१० चिन्तयिष्यामि । अवधीरणाभीरुकं पुनर्वेपते मे हृदयम् ।
१२.१-२ अयि आत्मगुणावमानिनि । को नाम शारदीयां ज्योत्स्नां पटान्तेन वारयिष्यति ।
१३.१-२ हला । चिन्तिता मया गीतिका । असंनिहितानि पुनर्लेखसाधनानि ।
१३.१-२ एतस्मिञ्शुकोदरसुकुमारे नलिनीपत्रे पत्रच्छेदभक्त्या नखैर्निक्षिप्तवर्णं कुरु । १३-५ शृणुतं तावत्संगतार्थं न वेति ।

६ **उभे।** अवहिदम्ह।

**शकुन्तला।** पठति।

तुज्झ ण आणे हिअअं मम उण कामो दिवा वि रत्तिं वि।
णिक्किव दावइ बलिअं तइ जुत्तमणोरहाइं अङ्गाइं ॥ १४ ॥

**राजा।** सहसोपसृत्य।

तपति तनुगात्रि मदनस्त्वामनिशं मां पुनर्दहत्येव।
ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः ॥१५॥

**सख्यौ।** विलोक्य सहर्षमुत्थाय। **सागदं जहाचिन्दिदफलस्स अविलम्बिणो मणोरहस्स।**

२ **शकुन्तला।** उत्थातुमिच्छति।

**राजा।** अलमलमायासेन।

संदष्टकुसुमशयनान्याशुविवर्णितमृणालवलयानि।
गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति ॥ १६ ॥

**अनसूया।** इदो सिलादलेक्कदेसं अणुगेण्हदु वअस्सो।

राजा उपविशति। शकुन्तला किंचिदपसरति।

३ **प्रियंवदा।** महाभाअ। दोण्हं पि णो अण्णोण्णाणुराओ पच्चक्खो। सहीसिणेहो उण मं पुणरुत्तवादिणीं करेदि।

---

१३·६ अवहिते स्वः।

१४ तव न जाने हृदयं मम पुनः कामो दिवापि रात्रावपि।
निष्कृप तापयति बलीयाँस्त्वयि युक्तमनोरथान्यङ्गानि ॥

१५·१-२ स्वागतं यथाचिन्तितफलस्याविलम्बिनो मनोरथस्य।

१६·१ इतः शिलातलैकदेशमनुगृह्णातु वयस्यः।

१६·३-४ महाभाग। द्वयोरपि युवयोरन्योन्यानुरागः प्रत्यक्षः। सखीस्नेहः पुनर्मां पुनरुक्तवादिनीं करोति।

राजा । उच्यताम् । विवक्षितं ह्यनुक्तमनुतापं जनयति ।

६ प्रियंवदा । इअं णो सही तुमं जेव्व उद्दिसिअ भअवदा मदणेण इमं अवत्थन्तरं णीदा । ता अरिहसि अब्भुववत्तीए से जीविदं अवलम्बिदुं ।

९ शकुन्तला । प्रियंवदामवलोक्य । हला । अलं अन्तेउरविहारपज्जुस्सुअस्स राएसिणो उवरुद्धेण ।

राजा । सुन्दरि ।

इदमनन्यपरायणमन्यथा
हृदयसंनिहिते हृदयं मम ।
यदि समर्थयसे मदिरेक्षणे
मदनबाणहतोऽस्मि हतः पुनः ॥ १७ ॥

अनसूया । वअस्स । बहुवल्लहा राआणो सुणीअन्ति । जधा णो पिअसही बन्धुअणसोअणीआ ण भोदि तधा णिव्वाहेहि ।

३ राजा । भद्रे ।

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य नः ।
समुद्रवसना चोर्वी सखी च युवयोरियम् ॥ १८ ॥

उभे । णिव्वुदम्ह ।

---

१६.६-८ इयं नौ सखी त्वामेवोद्दिश्य भगवता मदनेनेदमवस्थान्तरं नीता । तदर्हस्यभ्युपपत्त्या तस्या जीवितमवलम्बितुम् ।

१६.९-१० हला । अलमन्तःपुरविहारपर्युत्सुकस्य राजर्षेरुपरुद्धेन ।

१७.१-२ वयस्य । बहुवल्लभा राजानः श्रूयन्ते । यथा नौ प्रियसखी बन्धुजनशोचनीया न भवति तथा निर्वाहय ।

१८.१ निर्वृते स्वः ।

**अनसूया।** बहिर्विलोक्य। **पियंवदे। एस मिअपोदओ इदो तदो**
३ **दिण्णदिट्ठी णूणं मादरं पब्भट्टं अण्णेसदि। ता संजोएमि**
**दाव णं।** उत्तिष्ठति।

**प्रियंवदा। णं चवलो क्खु एसो। एआइणी णं णिओजेदुं**
६ **ण पारेसि।** उभे प्रस्थिते।

**शकुन्तला। हला। अण्णदरा वो गच्छदु। असरणाम्हि।**

**उभे।** सस्मितम्। **जो पुहवीए सरणं सो तुह समीवे।** निष्क्रान्ते।

९ **शकुन्तला। कधं गदाओ ज्जेव्व।**

**राजा।** दिशोऽवलोक्य। **सुन्दरि। अलमावेगेन। नन्वयमारा-**
**धयिता जनस्तव समीपे वर्तते। तदुच्यताम् —**

> **किं शीतलैः क्लमविनोदिभिरार्द्रवाता-**
> **न्संचारयामि नलिनीदलतालवृन्तैः।**
> **अङ्के निधाय करभोरु यथासुखं ते**
> **संवाहयामि चरणावुत पद्मताम्रौ॥ १९॥**

**शकुन्तला। ण माणणीएसु अत्ताणं अवराहइस्सं।** अवस्था-
सदृशमुत्थाय प्रस्थिता।

३ **राजा।** अवष्टभ्य। **सुन्दरि। अपरिनिर्वाणो दिवसः। इयं च**
**ते शरीरावस्था।**

---

१८.२-४ प्रियंवदे। एष मृगपोतक इतस्ततो दत्तदृष्टिर्नूनं मातरं प्रभ्रष्टा-
मन्विष्यति। तत्संयोजयामि तावदेनम्।
१८.५-६ ननु चपलः खल्वेषः। एकाकिन्येनं नियोजयितुं न पारयसि।
१८.७ हला। अन्यतरा युवयोर्गच्छतु। अशरणास्मि।
१८.८ यः पृथिव्याः शरणं स तव समीपे।
१८.९ कथं गते एव।
१९.१-२ न माननीयेष्वात्मानमपराधयिष्यामि।

उत्सृज्य कुसुमशयनं नलिनीदलकल्पितस्तनावरणे ।
कथमातपे गमिष्यसि परिबाधापेलवैरङ्गैः ॥ २० ॥

**शकुन्तला ।** प्रस्थितैव ।

**राजा ।** स्वगतम् । **कथमात्मनः प्रियं न करिष्ये ।** उत्थायोपसृत्य
३ पटान्तादवलम्बते ।

**शकुन्तला ।** कृतककोपा । **पोरव । रक्ख विणअं । इदो तदो
इसीओ संचरन्दि ।**

६ **राजा ।** दिशोऽवलोक्य । **कथं प्रकाशमस्मि निर्गतः ।** ससंभ्रमं
शकुन्तलां मुक्त्वा तैरेव पदैर्निवर्तते ।

**शकुन्तला ।** स्तोकमुपगम्य । साङ्गभङ्गम् । **पोरव । अणिच्छा-
९ पूरवोवि संभासणमेत्तसुहिदो ण दे अअं जणो विसुमरिदव्वो ।**

**राजा । सुन्दरि ।**

त्वं दूरमपि गच्छन्ती हृदयं न जहासि मे ।
दिनावसानच्छायेव पुरोमूलं वनस्पतेः ॥ २१ ॥

**नेपथ्ये । चक्कवाअवहू । आमन्तेहि सहअरं । उवट्ठिदा रअणी ।**

**शकुन्तला ।** कर्णं दत्त्वा । ससंभ्रमम् । **पोरव । एसा मम सरीर-
३ वुत्तन्तोपलम्भाय तादस्स धम्मकणीअसी अय्या गोदमी उव-
त्थिदा । ता विडवन्तरिदो होइ ।**

---

२०.४-५ पौरव । रक्ष विनयम् । इतस्तत ऋषयः संचरन्ति ।
२०.८-९ पौरव । अनिच्छापूरकोऽपि संभाषणमात्रसुखितो न तेऽयं जनो विस्मर्तव्यः ।
२१.१ चक्रवाकवधु । आमन्त्रयस्व सहचरम् । उपस्थिता रजनी ।
२१.२-४ पौरव । एषा मम शरीरवृत्तान्तोपलम्भाय तातस्य धर्मकनीयस्यार्या गौतम्युपस्थिता । तद्विटपान्तरितो भव ।

**राजा ।** तथा करोति ।

६ [ ततः प्रविशति पात्रहस्ता गौतमी । ]

**गौतमी । अच्चाहिदं । इह देवदासहाआ चिट्ठसि ।**

**शकुन्तला । इदाणीं जेव्व मालिणिं अवदिण्णाओ पिअंवदा-**

९ **मिस्साओ ।**

**गौतमी । इमिणा दब्भोदएण णिराबाधं दे सरीरं भविस्सदि ।** दर्भोदकेन शकुन्तलामभ्युक्ष्य । **अपि लहुसंदापाइं दे अङ्गाइं ।**

१२ **शकुन्तला । अत्थि विसेसो ।**

**गौतमी । वच्छे । परिणदो दिअसो । ता एहि । उडअं जेव्व गच्छम्ह ।**

१५ **शकुन्तला ।** स्वगतम् । **हिअअ । पढमं जेव्व सुहोअणदे मणोरधे कादरभावं ण मुञ्चेसि । दाणिं साणुसअविघट्टिदस्स कधं दे सन्दापो ।** पदान्तरे प्रतिनिवृत्त्य । प्रकाशम् । **लदागहअ । सन्दाव-**

१८ **हारअ । आमन्दए तुमं पुणोवि परिभोआअ ।** इति निष्क्रान्ते ।

---

२१·७ अत्याहितम् । इह देवतासहाया तिष्ठसि ।

२१·८-९ इदानीमेव मालिनीमवतीर्णाः प्रियंवदामिश्राः ।

२१·१०-११ अनेन दर्भोदकेन निराबाधं ते शरीरं भविष्यति । .... । अपि लघुसंतापानि ते अङ्गानि ।

२१·१२ अस्ति विशेषः ।

२१·१३-१४ वत्से । परिणतो दिवसः । तदेहि । उटजमेव गच्छावः ।

२१·१५-१८ हृदय । प्रथममेव सुखोपनते मनोरथे कातरभावं न मुञ्चसि । इदानीं सानुशयविघट्टितस्य कथं ते संतापः । [ ........ । .... ] लतागृहक । सन्तापहारक । आमन्त्रये त्वां पुनरपि परिभोगाय । [ ........ ]

**राजा ।** पूर्वस्थानमेत्य । सनिःश्वासम् । अहो विघ्नवत्यः प्रार्थितसिद्धयः । मया हि –

मुहुरङ्गुलिसंवृताधरोष्ठं
प्रतिषेधाक्षरविक्लवाभिरामम् ।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं न चुम्बितं तु ॥ २२ ॥

क्व नु खलु साम्प्रतं गच्छामि । अथ वा इहैव तावत्प्रियापरिभुक्ते लतामण्डपे स्थास्यामि । सर्वतोऽवलोक्य ।

तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं
क्लान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः ।
हस्ताद्भ्रष्टमिदं बिसाभरणमित्यासज्जमानेक्षणो
निर्गन्तुं सहसा न वेतसगृहाच्छक्नोमि शून्यादपि ॥ २३ ॥

**नेपथ्ये ।** भो भो राजन् ।

सायंतने सवनकर्मणि संप्रवृत्ते
वेदीं हुताशनवतीं परितः प्रयस्ताः ।
छायाश्चरन्ति बहुधा भयमादधानाः
संध्याभ्रकूटकपिशाः पिशिताशनानाम् ॥ २४ ॥

**राजा ।** भो भोस्तपस्विनः । मा भैष्ट । अयमहमागतोऽस्मि ।

इति निष्क्रान्तः ।

॥ इति तृतीयोऽङ्कः ॥

# ॥ अथ चतुर्थोऽङ्कः ॥

ततः प्रविशतः कुसुमावचयमभिनयन्त्यौ सख्यौ ।

**अनसूया।** हला पिअंवदे। जइवि गन्धव्वेण विवाहेण णिव्वु-
३ त्तकल्लाणा पिअसही सउन्दला अणुरूअभत्तुभाइणी संवुत्तेति
णिव्वुदं मे हिअअं तह वि एत्तिअं चिन्तणिज्जं।

**प्रियंवदा।** कधं विअ।

६ **अनसूया।** अज्ज सो राएसी इट्ठिपरिसमत्तीए इसीहिं विस-
ज्जिदो अत्तणो णअरं पविसिअ अन्तेउरसमागदो इदोगदं
सुमरेदि वा ण वेत्ति।

९ **प्रियंवदा।** एत्थ दाव वीसत्था होइ। ण तादिसा आकिदि-
विसेसा गुणविरोहिणो होन्ति। तादो दाणिं इमं वुत्तन्तं सुणिअ
ण जाणे किं पडिवज्जिसदित्ति।

१२ **अनसूया।** जहा मं पुच्छसि तहा तादस्स अणुमदं पिअं अ।

---

४·०·२-४ हला प्रियंवदे। यद्यपि गान्धर्वेण विवाहेन निर्वृत्तकल्याणा प्रियसखी शकुन्तला अनुरूपभर्तृभागिनी संवृत्तेति निर्वृतं मे हृदयं तथाप्येतावच्चिन्तनीयम्। ४·०·५ कथमिव।

४·०·६-८ अद्य स राजर्षिरिष्टिपरिसमाप्त्या ऋषिभिर्विसर्जित आत्मनो नगरं प्रविश्यान्तःपुरसमागत इतोगतं स्मरति वा न वेति।

४·०·९-११ अत्र तावद्विश्वस्ता भव। न तादृशा आकृतिविशेषा गुणविरोधिनो भवन्ति। तात इदानीमिमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यतीति।

४·०·१२ यथा मां पृच्छसि तथा तातस्य अनुमतं प्रियं च।

**प्रियंवदा ।** कधं विअ ।

**अनसूया ।** गुणवदे कण्णआ पडिवादणिज्जेदि अअं दाव पढमो
१५ संकप्पो । तं जदि देव्वं एव्व संपादेदि णं अप्पआसेण कदत्थो
गुरुअणो ।

**प्रियंवदा ।** पुष्पभाजनं विलोक्य । सहि । अवचिदाइं क्खु बलि-
१८ कम्मपज्जताइं कुसुमाइं ।

**अनसूया ।** णं सउन्दलाएव्वि सोहग्गदेवदा अच्चणीआ ।

**प्रियंवदा ।** जुज्जदि ।

२१ उभे तदेव कर्म नाटयतः ।

**नेपथ्ये ।** अयमहं भोः ।

**अनसूया ।** श्रुत्वा । अदिधिणा विअ णिवेदिदं ।

२४ **प्रियंवदा ।** णं उडजसंणिहिदा सउन्दला । आँ । अज्ज उण
हिअएण असंणिहिदा ।

**अनसूया ।** तेण हि भोदु एत्तिकेहिं कुसुमेहिं ।

२७ उभे प्रस्थिते ।

---

४·०·१३ कथमिव ।
४·०·१४-१६ गुणवते कन्यका प्रतिपादनीयेत्ययं तावत्प्रथमः संकल्पः । तं यदि दैवमेव संपादयति नन्वप्रयासेन कृतार्थो गुरुजनः ।
४·०·१७-१८ सखि । अवचितानि खलु बलिकर्मपर्याप्तानि कुसुमानि ।
४·०·१९ ननु शकुन्तलाया अपि सौभाग्यदेवता अर्चनीया ।
४·०·२० युज्यते । ४·०·२३ अतिथिनेव निवेदितम् ।
४·०·२४-२५ ननु उटजसंनिहिता शकुन्तला । आँ । अद्य पुनर्हृदयेनासंनिहिता ।
४·०·२६ तेन हि भवत्वेतावद्भिः कुसुमैः ।

**नेपथ्ये ।** आः अतिथिपरिभाविनि ।

विचिन्तयन्ती यमनन्यमानसा
तपोधनं वेत्सि न मामुपस्थितम् ।
स्मरिष्यति त्वां न स बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव ॥ १ ॥

उभे श्रुत्वा विषण्णे ।

**प्रियंवदा ।** हद्धि । हद्धि । तं जेव्व संवुत्तं । कस्सिंसपि पूजारिहे
३ अवरद्धा सुण्णहिअआ पिअसही ।

**अनसूया ।** पुरोऽवलोक्य । ण क्खु जस्सिंसकस्सिंसपि । सुलहकोओ क्खु एसो दुव्वासमहेसी । तह सविअ चट्टुलदुव्वाराए गदीए
६ पडिणिवुत्तो ।

**प्रियंवदा ।** को अण्णो हुतवहादो दहिदुं पहवदि । ता गच्छ । पादेसु पणमिअ पसाएहि णं जाव अहं से अग्घोदअं उवकप्पेमि ।
९ **अनसूया ।** तह । निष्क्रान्ता ।

**प्रियंवदा ।** पदान्तरेण स्खलितं निरूप्य । आवेगक्खलिदाए पब्भट्टं अग्गहत्थादो पुप्फभाअणं मे । ता पुणोवि अवचिणिस्सं ।
१२ तथा करोति ।

---

१·२-३ हा धिक् । हा धिक् । तदेव संवृत्तम् । कस्मिन्नपि पूजार्हेऽपराद्धा शून्यहृदया प्रियसखी ।

१·४-६ न खलु यस्मिन्कस्मिन्नपि । सुलभकोपः खल्वेष दुर्वासोमहर्षिः । तथा शप्त्वा चटुलदुर्वारया गत्या प्रतिनिवृत्तः ।

१·७-८ कोऽन्यो हुतवहाद्दग्धुं प्रभवति । तद्गच्छ । पादयोः प्रणम्य प्रसादय तं यावदहं तस्यार्घोदकमुपकल्पयामि । १·९ तथा ।

१·१०-११ आवेगस्खलितायाः प्रभ्रष्टमग्रहस्तात्पुष्पभाजनं मे । तत्पुनरप्यवचेष्यामि ।

प्रविश्य। **अनसूया**। सहि। सरीरी विअ कोवो कस्स सोणुणअं गेण्हदि। किंचि उण साणुक्कोसो किदो।

१५ **प्रियंवदा**। तस्सिं बहुअं एदं। ता कधेहि।

**अनसूया**। जदा णिवत्तिदुं णेच्छदि तदा विण्णविदो मए—भअवं पढमभत्ति अवेक्खिअ अत्तपहावविण्णादपरमत्थस्स दुहि-

१८ दाजणस्स भअवदा अअं अपराधो मरिसिदव्वोत्ति।

**प्रियंवदा**। तदो तदो।

**अनसूया**। तदो ण मे वअणं अण्णधा भविदुं अरहदि। अहि-

२१ ण्णाणाहरणदंसणेण सावो णिवत्तिस्सदित्ति मन्तअन्तो ज्जेव्व अन्तरिहिदो।

**प्रियंवदा**। सक्कं दाणिं अस्ससिदुं। अत्थि तेण राएसिणा

२४ संपत्थिदेण सणामधेअंकिदं अंगुलीअं सुमरणीअंति सउन्दलाए हत्थे सअं जेव्व पिणद्धं। तस्सिं साहीणो उवाओ भविस्सदि।

उभे परिक्रामतः।

---

१·१३-१४ सखि। शरीरीव कोपः कस्य सोऽनुनयं गृह्णाति। किंचित्पुनः सानुक्रोशः कृतः।

१·१५ तस्मिन्बहुकमेतत्। तत्कथय।

१·१६-१८ यदा निवर्तितुं नेच्छति तदा विज्ञापितो मया—भगवन् प्रथमभक्तिमवेक्ष्य आत्मप्रभावविज्ञातपरमार्थस्य दुहितृजनस्य भगवतायमपराधो मर्षितव्य इति। १·१९ ततस्ततः।

१·२०-२२ ततो न मे वचनमन्यथा भवितुमर्हति। अभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यत इति मन्त्रयन्नेवान्तर्हितः।

१·२३-२५ शक्यमिदानीमाश्वसितुम्। अस्ति तेन राजर्षिणा संप्रस्थितेन स्वनामधेयाङ्कितमङ्गुलीयकं स्मरणीयमिति शकुन्तलाया हस्ते स्वयमेव पिनद्धम्। तस्मिन्स्वाधीन उपायो भविष्यति।

२७ **अनसूया।** हला पिअंवदे। पेक्ख पेक्ख। वामहत्थोपणिहिद-वदना आलिखिदा विअ पिअसही। भत्तुगदाए चिन्ताए अत्ताणअं पि एसा ण विभावेदि। किं उण आअन्तुअं।

३० **प्रियंवदा।** हला अणसूए। दोण्हं एव अम्हेसु एसो साव-वुत्तन्तो चिट्ठदु। रक्खणीआ क्खु पकिदिपेलवा पिअसही।

**अनसूया।** को दाणिं उण्होदएण णवमालिअं सिञ्चदि।

३३ इति निष्क्रान्ते।

॥ विष्कम्भकः ॥

॥ ततः प्रविशति सुप्तोत्थितः कण्वशिष्यः ॥

३६ **शिष्यः।** वेलोपलक्षणार्थमादिष्टोऽस्मि तत्रभवता प्रवासात्प्रति-निवृत्तेनोपाध्यायकाश्यपेन कियदवशिष्टं रजन्या इति। प्रकाशं निर्गतस्तावदवलोकयामि कियदवशिष्टं रजन्या इति। परिक्रम्या-

३९ वलोक्य च। हन्त। प्रभातम्। तथा हि—

कर्कन्धूनामुपरि तुहिनं रञ्जयत्यग्रसंध्या
दार्भं मुञ्चत्युटजपटलं वीतनिद्रो मयूरः।
वेदीप्रान्तात्खुरविलिखितादुत्थितश्चैष सद्यः
पश्चादुच्चैर्भवति हरिणो गात्रमायच्छमानः ॥ २ ॥

---

१·२७-२९ हला प्रियंवदे। प्रेक्षस्व प्रेक्षस्व। वामहस्तोपनिहितवदना आलिखितेव प्रियसखी। भर्तृगतया चिन्तयात्मानमप्येषा न विभावयति। किं पुनरागन्तुकम्।

१·३०-३१ हला अनसूये। द्वयोरेवावयोरेष शापवृत्तान्तस्तिष्ठतु। रक्षणीया खलु प्रकृतिपेलवा प्रियसखी।

१·३२ क इदानीमुष्णोदकेन नवमालिकां सिञ्चति।

अपि च ।

पादन्यासं क्षितिधरगुरोर्मूर्ध्नि कृत्वा सुमेरोः
क्रान्तं येन क्षपिततमसा मध्यमं धाम विष्णोः ।
सोऽयं सोमः पतति गगनादल्पशेषैर्मयूखै-
र्दूरारोहो भवति महतामप्यपभ्रंशनिष्ठः ॥ ३ ॥

अपटीक्षेपेण प्रविश्य । **अनसूया ।** एवं णाम विषअपरंमुहस्सावि एदं ण विदिदं जधा तेण रण्णा सउन्दलाए अणज्जं आचरिदं ति ।

३ **शिष्यः ।** यावदुपस्थितां होमवेलां गुरवे निवेदयामि । निष्क्रान्तः ।

**अनसूया ।** पडिबुद्धावि किं करिस्सं । ण मे उइदेसु पहाद-करणीएसु हत्थपादा पसरन्ति । सकामो दाणिं कामो भोदु जेण ६ सुद्धहिअआ पिअसही असच्चसंधे जणे पदं कारिदा । अध वा ण तस्स राएसिणो अवराहो । दुव्वासकोवो एत्थ विप्पकरेदि । अण्णधा कधं सो राएसी तादिसाइं मन्तिअ एत्तिअस्स कालस्स ९ लेहमेत्तं पि ण विसज्जेदि । विचिन्त्य । इदं अङ्गुलीयं से अहिण्णाणं विसज्जेम । अध वा दुक्खसीले तवस्सिजणे को अब्भत्थीअदु ।

---

३·१-२ एवं नाम विषयपराङ्मुखस्याप्येतन्न विदितं यथा तेन राज्ञा शकु-न्तलायामनार्यमाचरितमिति ।

३·४-१३ प्रतिबुद्धापि किं करिष्ये । न मे उचितेषु प्रभातकरणीयेषु हस्तपादं प्रसरति । सकाम इदानीं कामो भवतु येन शुद्धहृदया प्रियसखी असत्यसंधे जने पदं कारिता । अथ वा न तस्य राज-र्षेरपराधः । दुर्वासःकोपोऽत्र विप्रकरोति । अन्यथा कथं स राजर्षिस्तादृशानि मन्त्रयित्वैतावतः कालस्य लेखमात्रमपि न विसर्जयति । [ ····· ] इदमङ्गुलीयं तस्याभिज्ञानं विसर्जयामः । अथ वा दुःखशीले तपस्विजने कोऽभ्यर्थ्यताम् ।

ण अ सहीगामी दोसोत्ति ववसिदा दाणिं पारम्ह पभास-
१२ णिवुत्तस्स तादकस्सवस्स दुस्सन्तपरिणीदं आवण्णसत्तं सउन्दलं
णिवेदिदुं। इत्थंगदे किं णु क्खु अम्हेहिं कादव्वं।

प्रविश्य। **प्रियंवदा।** सहर्षम्। सहि। तुवर तुवर सउन्दलाए
१५ पत्थाणकौदुअं णिव्वतिदुं।

**अनसूया।** सहि। कधं एदं।

**प्रियंवदा।** सुणाहि। दाणिं जेव्व सुहसअणपुच्छणणिमित्तं
१८ सउन्दलासआसं गदम्हि।

**अनसूया।** तदो तदो।

**प्रियंवदा।** जाव तं लज्जावणदमुहिं परिस्सजिअ तादकस्सवो
२१ अहिणन्ददि – दिट्ठिआ धूमावरुद्धदिट्ठिणोवि जणस्स पावए
एव्व आहुदी पडिदा। सुसिस्सपडिपादिआ विअ विज्जा असो-
अणिज्जासि मे संवुत्ता। ता अज्ज ज्जेव इसिपरिग्गहीदं तुमं
२४ भत्तुणो सआसं विसज्जेम्मित्ति।

---

न च सखीगामी दोष इति व्यवसिता इदानीं पारयामः प्रभास-
निवृत्तस्य तातकाश्यपस्य दुष्यन्तपरिणीतामापन्नसत्त्वां शकुन्तलां
निवेदयितुम्। इत्थंगते किं नु खल्वस्माभिः कर्तव्यम्।

३·१४-१५ सखि। त्वरस्व त्वरस्व शकुन्तलायाः प्रस्थानकौतुकं निर्वर्तयि-
तुम्। ३·१६ सखि। कथमेतत्।

३·१७-१८ शृणु। इदानीमेव सुखशयनप्रच्छननिमित्तं शकुन्तलासकाशं
गतास्मि। ३·१९ ततस्ततः।

३·२०-२४ यावत्तां लज्जावनतमुखीं परिष्वज्य तातकाश्यपोऽभिनन्दति –
दिष्ट्या धूमावरुद्धदृष्टेरपि जनस्य पावक एवाहुतिः पतिता।
सुशिष्यप्रतिपादितेव विद्या अशोचनीयासि मे संवृत्ता।
तदद्यैवर्षिपरिगृहीतां त्वां भर्तुः सकाशं विसर्जयामीति।

**अनसूया।** अध केण आचक्खिदो तादस्स अअं वुत्तन्तो।

**प्रियंवदा।** अग्गिसरणं पविट्ठस्स सरीरं विणा छन्दोवदीए २७ वाआए।

**अनसूया।** सविस्मयम्। कधं विअ।

**प्रियंवदा।** संस्कृतमाश्रित्य।

दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः।
अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव ॥ ४ ॥

**अनसूया।** सहर्षं प्रियंवदामाश्लिष्य। सहि। पिअं मे पिअं मे। किदु अज्ज ज्जेव्व सउन्दला णीअदित्ति उक्कण्ठासाहारणं खु ३ दाणिं परितोसं समुव्वहामि।

**प्रियंवदा।** अम्हे दाव उक्कण्ठां विणोदयिस्सामो। सा दाणिं णिव्वुदा भोदु।

६ **अनसूया।** तेण हि एदस्सिं चूदसाहावलम्बिदे णारिएलसमुग्गए एदण्णिमित्तं जेव्व कालन्तरक्खमा णिक्खित्ता मए केसरगुण्डा। ते तुमं हत्थसंणिहिदे करेहि जाव अहं पि से

---

३·२५ अथ केनाख्यातस्तातस्यायं वृत्तान्तः।

३·२६-२७ अग्निशरणं प्रविष्टस्य शरीरं विना छन्दोवत्या वाचा।

३·२८ कथमिव।

४·१-३ सखि। प्रियं मे प्रियं मे। किं त्वद्यैव शकुन्तला नीयत इत्युत्कण्ठासाधारणं खल्विदानीं परितोषं समुद्वहामि।

४·४-५ आवां तावदुत्कण्ठां विनोदयिष्यावः। सेदानीं निर्वृता भवतु।

४·६-१० तेन ह्येतस्मिंश्चूतशाखावलम्बिते नारिकेलसमुद्गक एतन्निमित्तमेव कालान्तरक्षमा निक्षिप्ता मया केसरगुण्डाः। तांस्त्वं हस्तसंनि-

९ **गोरोअणं तित्थमित्तिअं दुव्वाकिसलआइं त्ति मङ्गलसमालम्भणं विरएमि ।** निष्क्रान्ता । प्रियंवदा नाट्येन सुमनोभाजनं गृह्णाति ।

**नेपथ्ये । गौतमि । आदिश्यन्तां शार्ङ्गरवमिश्राः शकुन्तला-**
१२ **नयनाय सज्जीभवतेति ।**

**प्रियंवदा । अणसूए । तुवर तुवर । एदे क्खु हत्थिणाउरगामिणो इसिओ सद्दावीअन्ति ।**

१५ प्रविश्य समालम्भनहस्ता **अनसूया । सहि । एहि । गच्छम्ह ।**

उभे परिक्रामतः ।

**प्रियंवदा ।** विलोक्य । **एसा सुज्जोदए एव्व सिहामज्जिदा**
१८ **पडिच्छिदणीवारवाअणाहिं तावसीहिं अहिणन्दीअमाणा सउन्दला चिट्ठदि । ता उवसप्पम्ह णं ।** तथा कुरुतः ।

ततः प्रविशति यथानिर्दिष्टासनस्था शकुन्तला गौतमी तापस्यश्च ।

२१ **तापसीनामन्यतमा । जादे । भत्तुणो बहुमाणसूअअं महादेवी-सद्दं अधिगच्छ ।**

**द्वितीया । वच्छे । वीरप्पसविणी होहि ।**

---

हितान्कुरु यावदहमपि तस्यै गोरोचनां तीर्थमृत्तिकां दूर्वा-किसलयानीति मङ्गलसमालम्भनं विरचयामि ।

४·१३-१४ अनसूये । त्वरस्व त्वरस्व । एते खलु हस्तिनापुरगामिन ऋषयः शब्दाय्यन्ते ।

४·१५ सखि । एहि । गच्छावः ।

४·१७-१९ एषा सूर्योदय एव शिखामज्जिता प्रतीष्टनीवारवायनाभिस्तापसी-भिरभिनन्द्यमाना शकुन्तला तिष्ठति । तदुपसर्पाव एनाम् ।

४·२१-२२ जाते । भर्तुर्बहुमानसूचकं महादेवीशब्दमधिगच्छ ।

४·२३ वत्से । वीरप्रसविनी भव ।

२४ **तृतीया ।** भत्तुणो बहुमदा होहि ।

इत्याशिषो दत्त्वा गौतमीवर्जं निष्क्रान्ताः ।

**सख्यौ ।** उपसृत्य । सहि । सुहमज्जणं दे होदु ।

२७ **शकुन्तला ।** दृष्ट्वा । सादरम् । साअदं पिअसहीणं । इदो णिसीदथ ।

**उभे ।** उपविश्य । हला सउन्दले । उज्जुआ होहि । जाव दे
३० मङ्गलसमालम्भणं विरएम ।

**शकुन्तला ।** उइदं पि एदं अज्ज बहुमाणिदव्वं । दुल्लहं दाणिं मे सहिमण्डनं भविस्सदि । बाष्पं विसृजति ।

३३ **उभे ।** सहि । ण दे उइदं मङ्गलकाले रोइदुं । अश्रूणि प्रमृज्य नाट्येन प्रसाधयतः ।

**प्रियंवदा ।** आहरणारिहं रूवं अस्समसुलहेहिं पसाहणेहिं विप्प-
३६ आरीअदि ।

प्रविश्योपायनहस्तौ **ऋषिकुमारकौ ।** इदमलंकरणम् । अलं-क्रियतामत्रभवती ।

३९ सर्वा विलोक्य विस्मिताः ।

---

४·२४ भर्तुर्बहुमता भव ।

४·२६ सखि । सुखमज्जनं ते भवतु ।

४·२७-२८ स्वागतं प्रियसख्योः । इतो निषीदतम् ।

४·२९-३० हला शकुन्तले । ऋजुका भव । यावत्ते मङ्गलसमालम्भनं विरचयावः ।

४·३१-३२ उचितमप्येतदद्य बहुमन्तव्यम् । दुर्लभमिदानीं मे सखीमण्डनं भविष्यति ।

४·३३-३४ सखि । न ते उचितं मङ्गलकाले रोदितुम् ।

४·३५-३६ आभरणार्हं रूपमाश्रमसुलभैः प्रसाधनैर्विप्रकार्यते ।

**गौतमी** । वच्छ णारअ । कुदो एदं ।

**प्रथमः** । तातकाश्यपप्रसादात् ।

४२ **गौतमी** । किं माणसी सिद्धी ।

**द्वितीयः** । न खलु । तत्रभवता वयमाज्ञप्ताः शकुन्तलाहेतो-र्वनस्पतिभ्यः कुसुमान्याहरत – इति । तत इदानीम् –

क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं
निष्ठ्यूतश्चरणोपभोगसुलभो लाक्षारसः केनचित् ।
अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-
र्दत्तान्याभरणानि तत्किसलयोद्भेदप्रतिद्वंद्विभिः ॥ ५ ॥

**प्रियंवदा** । शकुन्तलां विलोक्य । कोडरसंभवावि महुअरी पोक्खर-महुअं जेव्व अहिलसदि ।

३ **गौतमी** । जादे । इमाए अब्भुववत्तीए सूइदा दे भत्तुणो गेहे अणुहोदव्वा राअलच्छी ।

**शकुन्तला** । लज्जां नाटयति ।

६ **प्रथमः** । गौतम । एहि । अभिषेकोत्तीर्णाय तातकाश्यपाय वनस्पतिसेवां निवेदयावः ।

**द्वितीयः** । एवं कुर्वः । निष्क्रान्तौ ।

९ **प्रियंवदा** । अणुवजुत्तभूसणो अअं जणो । चित्तकम्मपरिचएण दाणिं दे अङ्गेसु आहरणविणिओअं करेम्ह ।

---

४.४० वत्स नारद । कुत एतत् । ४.४२ किं मानसी सिद्धिः ।
५.१-२ कोटरसंभवापि मधुकरी पुष्करमधुकमेवाभिलषति ।
५.३-४ ज़ाते । अनयाभ्युपपत्त्या सूचिता ते भर्तुर्गृहेऽनुभवितव्या राज-लक्ष्मीः ।
५.९-१० अनुपयुक्तभूषणोऽयं जनः । चित्रकर्मपरिचयेनेदानीं तेऽङ्गेष्वा-भरणविनियोगं कुर्वः ।

शकुन्तला । सस्मितम् । जाणे वो णेउण्णं ।

१२ सख्यौ । नाट्येनाभरणमामुञ्चतः ।

ततः प्रविशति स्नानोत्तीर्णः कण्वः ।

काश्यपः । यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमिदं स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥ ६ ॥

परिक्रामति ।

सख्यौ । हला सउन्दले । अवसिदमण्डनासि । परिधेहि संपदं
३ इमं पवित्तं खोमजुअलं ।

शकुन्तला । उत्थाय परिधत्ते ।

गौतमी । जादे । एसो दे आणन्दपरिवाहिणा चक्खुणा परि-
६ स्सजन्तो विअ गुरू उवट्ठिदो । आआरं दाव पडिवज्जस्स ।

शकुन्तला । सव्रीडम् । ताद । वन्दामि ।

काश्यपः । वत्से ।

ययातेरिव शर्मिष्ठा भर्तुर्बहुमता भव ।
सुतं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥ ७ ॥

गौतमी । भअवं । वरो खु एसो । ण आसिसा ।

---

५·११ जाने वो नैपुण्यम् ।

६·२-३ हला शकुन्तले । अवसितमण्डनासि । परिधेहि साम्प्रतमिदं पवित्रं क्षौमयुगुलम् ।

६·५-६ जाते । एष त आनन्दपरिवाहिणा चक्षुषा परिष्वजमान इव गुरुरुपस्थितः । आचारं तावत्प्रतिपद्यस्व । ६·७ तात । वन्दे ।

७·१ भगवन् । वरः खल्वेषः । न आशीः ।

**काश्यपः ।** इतः सद्योहुतानग्नीन्प्रदक्षिणीकुरुष्व ।

३ **शकुन्तला ।** प्रदक्षिणीकरोति ।

**काश्यपः ।** ऋक्छन्दसाशास्ते ।

अमी वेदिं परितः क्लृप्तधिष्ण्याः
समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः ।
अपघ्नन्तो दुरितं हव्यगन्धै-
र्वैतानास्त्वा वह्नयः पावयन्तु ॥ ८ ॥

**काश्यपः ।** वत्से । प्रतिष्ठस्वेदानीम् । सदृष्टिक्षेपम् । क्व ते शार्ङ्गरवमिश्राः ।

३ प्रविश्य समं । **त्रयः ।** भगवन्निमे वयम् ।

**काश्यपः ।** शार्ङ्गरव । भगिन्यास्ते मार्गमादेशय ।

**शार्ङ्गरवः ।** इत इतो भवती ।

६ [ सर्वे परिक्रामन्ति । ]

**काश्यपः ।** भो भोः संनिहितदेवतास्तपोवनतरवः ।

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रवृत्तिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥९॥

**शार्ङ्गरवः ।** कोकिलरवं सूचयित्वा ।

अनुमतगमना शकुन्तला
तरुभिरियं वनवासबन्धुभिः ।
परभृतविरुतं कलं यथा
प्रतिवचनीकृतमेभिरीदृशम् ॥ १० ॥

आकाशे । रम्यान्तरः कमलिनीहरितैः सरोभि-
छायाद्रुमैर्नियमितार्कमयूखतापः ।
भूयात्कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः ॥ ११ ॥

सर्वे सविस्मयमाकर्णयन्ति ।

गौतमी । जादे । णादिजणसिणिद्धाहिं अब्भणुण्णादगमणासि
३ तवोवणदेवताहिं । ता पणम भअवदीणं ।

शकुन्तला । तथा कृत्वा । परिक्रम्य । जनान्तिकम् । हला पिअंवदे ।
अज्जउत्तदंसणुस्सुआए वि अस्समपदं परिच्चअन्तीए दुःख-
६ दुःखेन मे चलणा पुरदो पवट्टन्ति ।

प्रियंवदा । ण केवलं तवोवणविरहकादरा सही एव । तुए
उवत्थिदविओअस्स तवोवणस्स वि दाव समवत्थं पेक्ख ।

उग्गलिददब्भकवला मिआ परिच्चत्तणच्चणा मोरा ।
ओसरिअपण्डुपत्ता मुअन्ति अस्सू विअ लदाओ ॥ १२ ॥

शकुन्तला । स्मृत्वा । ताद । लदाबहिणिअं दाव माधवीं
आमन्तइस्सं ।

---

११·२-३ जाते । ज्ञातिजनस्निग्धाभिरभ्यनुज्ञातगमनासि तपोवनदेवताभिः । तत्प्रणम भगवतीः ।

११·४-६ हला प्रियंवदे । आर्यपुत्रदर्शनोत्सुकाया अप्याश्रमपदं परित्यजन्त्या दुःखदुःखेन मे चरणौ पुरतः प्रवर्तेते ।

११·७-८ न केवलं तपोवनविरहकातरा सख्येव । त्वयोपस्थितवियोगस्य तपोवनस्यापि तावत्समवस्थां प्रेक्षस्व ।

१२ उद्गलितदर्भकवला मृगाः परित्यक्तनर्तना मयूराः ।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः ॥

१२·१-२ तात । लताभगिनीं तावन्माधवीमामन्त्रयिष्ये ।

